रामायणं काव्यमनन्तपुण्यम्
श्रीशङ्करेणाभिहितं भवान्यै।
भक्त्या पठेद्यः शृणुयात् स पापैर्-
विमुच्यते जन्मशतोद्भवैश्च॥ ७१ ॥

अध्यात्मरामं पठतश्च नित्यम्
श्रोतुश्च भक्त्या लिखितुश्च रामः।
अतिप्रसन्नश्च सदा समीपे
सीतासमेतः श्रियमातनोति॥ ७२ ॥

रामायणं जनमनोहरमादिकाव्यम्
ब्रह्मादिभिः सुरवरैरपि संस्तुतं च।
श्रद्धान्वितः पठति यः शृणुयात्तु नित्यम्
विष्णोः प्रयाति सदनं स विशुद्धदेहः॥ ७३ ॥

॥ इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे उत्तरकाण्डे नवमः सर्गः॥ ९॥

॥ इति श्रीमदध्यात्मरामायणे उत्तरकाण्डः समाप्तः॥

॥ इति श्रीमदध्यात्मरामायणं सम्पूर्णम्॥

